भामण्डलोऽप्ययोध्यायां मुक्त्वा भरतमुत्सुकः ।
आययौ सपरीवारविशल्यासंयुतस्ततः ॥ ६५ ॥
ज्वलद्दीपविमानस्थो भीतैः सूर्योदयभ्रमात् ।
क्षणं दृष्टो निजैः सोऽधाद्विशल्यामुपलक्ष्मणम् ॥ ६६ ॥
तया च पाणिना स्पृष्टाल्लक्ष्मणाल्तत्क्षणादपि ।
निःसृत्य शाक्यगाच्छक्तिर्यष्टिनेव महोरगी ॥ ६७ ॥
तस्याः स्नानाम्भसाऽन्येऽपि रामादेशाद्योधिताः ।
निःशल्या जज्ञिरे सैन्याः पुनर्जाता इव क्षणात् ॥ ६८ ॥
अस्याः स्नानाम्भसा सेक्तुं कुम्भकर्णादयोऽपि ते ।
आनीयतामिहेत्युच्चैरादिदेश रघूद्वहः ॥ ६९ ॥
तदानीमेव तैर्देव प्रव्रज्या जगृहे स्वयम् ।
इति विज्ञपयामासुरारक्षा लक्ष्मणाग्रजम् ॥ ७० ॥
वन्द्यास्तेऽद्य महात्मानो मोच्या मुक्तिपथस्थिताः ।
इति रामगिराऽऽरक्षैर्नत्वाऽमुच्यन्त ते क्षणात् ॥ ७१ ॥
विशल्यां कन्यकास्ताश्च तदोपायंस्त लक्ष्मणः ।
रावणोऽपि रणायागादमर्षणशिरोमणिः ॥ ७२ ॥
प्रणम्य रामं सौमित्रिरुत्तस्थेऽधिज्यकार्मुकः ।
विवाहाद्युत्सवेभ्योऽपि वीराणामुत्सवो रणः ॥ ७३ ॥
यद्यदस्त्रं दशग्रीवो विससर्जातिदारुणम् ।
तत्तच्चिच्छेद सौमित्रिरस्त्रैः कदलिकाण्डवत् ॥ ७४ ॥
अस्त्रच्छेदादथ क्रुद्धश्चक्रं चिक्षेप रावणः ।
तल्लक्ष्मणोरस्यपतच्चपेटावच्च धारया ॥ ७५ ॥

तदेवादाय सौमित्री रावणस्याच्छिदच्छिर: ।
निजास्त्रैरप्यवक्रान्द: पतेत् स्वस्य कदापि हि ॥ ७६ ॥
सीता स्वर्णशलाकेव निर्मला शीलशालिनी ।
रामेण जगृहे लङ्काराज्ये न्यस्तो बिभीषण: ॥ ७७ ॥
शत्रुं निहत्य ससहोदरदारमित्रो
रामो ययावथ निजां नगरीमयोध्याम् ।
उत्पन्नया परकलत्ररिरंसयाऽपि[1]
त्वा कुलक्षयमगान्नरकं दशास्य: ॥ २७८ ॥

॥ इति सीतारावणकथानकम् ॥ ८८ ॥

तस्मात् ।

लावण्यपुण्यावयवां पदं सौन्दर्यसम्पद: ।
कलाकलापकुशलामपि जह्यात्परस्त्रियम् ॥१००॥

दुस्त्यजामपि परस्त्रियं जह्यात्परिहरेत् । दुस्त्यजत्वे हेतूनाह । लावण्यपुण्यावयवां लावण्यं स्पृहणीयता रूपादिभ्योऽतिरिक्तं तेन पुण्या: पवित्रा अवयवा यस्यास्तां, पदं स्थानं सौन्दर्यसंपदो रूपसम्पद:, कला हासमतिर्लेखाद्या: स्त्रीजनोचिता: तासां कलाप: समूहस्तत्र कुशलां प्रवीणाम् । लावण्यं, रूपं, वैदग्ध्यं च परदाराणां दुस्त्यजत्वे हेतु: । अपि शब्दस्त्रिष्वपि हेतुषु सम्बन्धनीय: ॥ १०० ॥

---

(१) स्वच हि ।

परस्त्रीगमने दोषानभिधाय परस्त्रीविरतान् प्रशंसति—

अकलङ्कमनोवृत्तेः परस्त्रीसन्निधावपि ।
सुदर्शनस्य किं ब्रूमः सुदर्शनसमुन्नतेः ॥ १०१ ॥

परस्त्रीसन्निधानेऽपि निष्कलङ्कचेतोवृत्तेः सुदर्शनाभिधानस्य महाश्रावकस्य किं ब्रूमः कां स्तुतिं कुर्महे । वचनगोचरातीता स्तुतिरित्यर्थः । सुदर्शनस्य विशेषणं सुदर्शनसमुन्नतेः शोभना दर्शनसमुन्नतिर्येनाप्तस्य, सुदर्शनप्रभावकस्येत्यर्थः ।

सुदर्शनस्य संप्रदायगम्यः । स चायम्—

अस्त्यङ्गदेशेऽत्यलकापुरी चम्पेति तत्र च ।
दधिवाहन इत्यासीद्राजाऽतिनरवाहनः ॥ १ ॥
अभूत्तस्याभया नाम कलाकौशलशालिनी ।
महादेवी स्वलावण्यावज्ञातत्रिदशाङ्गना ॥ २ ॥
इतो नगर्यां तस्यां च समग्रवणिगग्रणीः ।
श्रेष्ठी वृषभदासोऽभूदासीनः श्रेष्ठकर्मणि ॥ ३ ॥
यथार्थनामिका जैनधर्मोपासनकर्मणा ।
अर्हद्दासीति तस्यासीद् वल्लभा शीलशालिनी ॥ ४ ॥
श्रेष्ठिनस्तस्य महिषीरक्षोऽभूत्सुभगाभिधः ।
अनेषीन्महिषीर्नित्यं स तु चारयितुं वने ॥ ५ ॥
वनान्निवृत्तः सोऽन्येद्युर्माघमासे दिनात्यये ।
अपश्यदप्रावरणं कायोत्सर्गस्थितं मुनिम् ॥ ६ ॥

भस्यां हिमनिशि स्थाणुरिव यः स्थास्यति स्थिरम्।
असौ धन्यो महात्मेति चिन्तयन् स गृहं ययौ ॥ ७ ॥
महामुनिमवज्ञातहिमासीपातवेदनम्।
तमेव चिन्तयन्नार्द्रमना रात्रिं निनाय सः ॥ ८ ॥
अविभातविभावर्यां गृहीत्वा महिषीस्ततः।
स ययौ तत्र यत्रासीत् स मुनिः प्रतिमास्थितः ॥ ९ ॥
कल्याणीभक्तिरानम्योपास्यांचक्रे स तं तदा।
अहो नैसर्गिकः कोऽपि विवेकस्तादृशामपि ॥ १० ॥
अत्रान्तरे चण्डरोचिरारोहदुदयाचलम्।
श्रद्धया तमिव द्रष्टुं कायोत्सर्गस्थितं मुनिम् ॥ ११ ॥
स नमो अरिहन्ताणमिति वाचमुदीरयन्।
द्वितीय इव चण्डांशुरुत्पपात नभस्तले ॥ १२ ॥
आकाशगामिनी नूनमियं विद्येति बुद्धितः।
नमस्कारपदं तं तु सुभगो निदधे हृदि ॥ १३ ॥
जाग्रत्स्वपन्नटंस्तिष्ठन्दिवा निशि गृहे बहिः।
तदपाठीत् स उच्छिष्टोऽप्येकश्राद्धा हि तादृशाः ॥ १४ ॥
ततः पप्रच्छ तं श्रेष्ठी विश्वोत्कृष्टप्रभावभृत्।
प्राप्तं पञ्चपरमेष्ठिनमस्कारपदं कुतः ॥ १५ ॥
अशेषं महिषीपालः कथयामास तत्ततः।
साधु भोः साधु भद्रेति प्रसन् श्रेष्ठी जगाद तम् ॥ १६ ॥
आकाशगमने हेतुरसौ विद्या न केवलम्।
किन्तु हेतुरसावेव गतौ स्वर्गापवर्गयोः ॥ १७ ॥

यत्किञ्चित्सुन्दरं वस्तु दुष्प्रापं भुवनत्रये ।
लीलया प्राप्यते सर्वं तदमुष्य प्रभावतः ॥ १८ ॥
अस्य पञ्चपरमेष्ठिनमस्कारस्य वैभवम् ।
परिमातुं न शक्तोऽस्मि वारि वारिनिधेरिव ॥ १९ ॥
साधु प्राप्तमिदं भद्र तत्त्वया पुण्ययोगतः ।
किन्तूच्छिष्टैर्न पठितव्यं गुरुनाम न जातुचित् ॥ २० ॥
व्यसनी व्यसनमिव न त्यक्तुं क्षणमप्यदः ।
अलमस्मीति तेनोक्तः श्रेष्ठी हृष्टोऽब्रवीदिदम् ॥ २१ ॥
तदधीष्वाखिलां पञ्चपरमेष्ठिनमस्क्रियाम् ।
कल्याणानि यथा ते स्युः परलोकेहलोकयोः ॥ २२ ॥
ततोऽशेषनमस्कारं लब्धार्थमिव [1]तद्धनः ।
परावर्त्तयताजस्रं सुभगः सुभगाशयः ॥ २३ ॥
महिषीपालकस्यास्य क्षुत्तृष्णावेदनाहरः ।
परमेष्ठिनमस्कारः प्रकामं समजायत ॥ २४ ॥
एवं तस्य नमस्कारपाठव्यसनिनः सतः ।
कियत्यपि गते काले वर्षाकालः समाययौ ॥ २५ ॥
धारानाराचधोरण्या प्रसर्पिण्या निरन्तरम् ।
अकीलयदिव द्यावापृथिव्यौ नव्यवारिदः ॥ २६ ॥
गृहाद्गृहीत्वा महिषीः सुभगोऽपि बहिर्गतः ।
विनिवृत्तोऽन्तराऽपश्यद्घोरपूरां महानदीम् ॥ २७ ॥

---

(१) क तद्धनम् ।

तां दृष्ट्वा स मनाग् भीतस्तस्थौ किञ्चिद्विचिन्तयन् ।
नदीं तीर्त्वा परक्षेत्रे मद्विष्यः प्राविशंस्ततः ॥ २८ ॥
नमस्कारं पठन् व्योमयानविद्याधिया ततः ।
उत्पपात कृतोत्फालो मध्येनदि पपात च ॥ २९ ॥
तत्रान्तःकर्दमं मग्नः खरः खदिरकीलकः ।
कृतान्तदन्तसोदर्यो हृदयस्य प्रविवेश च ॥ ३० ॥
तथैवावर्त्तयन् पञ्चपरमेष्ठिनमस्क्रियाम् ।
तदा मर्माविधा तेन कालधर्ममियाय सः ॥ ३१ ॥
श्रेष्ठिपत्न्यास्ततः सोऽर्हद्दास्याः कुक्षाववातरत् ।
नमस्काररतानां हि सङ्गतिर्न विसंवदेत् ॥ ३२ ॥
तस्मिन् गर्भस्थिते मासि तार्त्तीयीके व्यतीयुषि ।
श्रेष्ठिनी श्रेष्ठिने स्वस्य दोहदानित्यचीकथत् ॥ ३३ ॥
गन्धोदकैः स्नपयितुं विलेप्तुं च विलेपनैः ।
अर्चितुं कुसुमैरिच्छाम्यर्हतां प्रतियातनाः ॥ ३४ ॥
प्रतिलम्भयितुं साधूनिच्छाम्याच्छादनादिभिः ।
संघं पूजयितुं दातुं दीनेभ्यश्च मतिर्मम ॥ ३५ ॥
इत्यादिदोहदांस्तस्याः श्रुत्वा मुदितमानसः ।
चिन्तामणिरिव श्रेष्ठिशिरोमणिरपूरयत् ॥ ३६ ॥
ततो नवसु मासेषु दिनेष्वर्द्धाष्टमेषु च ।
गतेषु श्रेष्ठिनी पुत्रमसूत शुभलक्षणम् ॥ ३७ ॥
सद्यो महोत्सवं कृत्वा श्रेष्ठी हृष्टः शुभे दिने ।
सूनोः सुदर्शन इति यथार्थं नाम निर्ममे ॥ ३८ ॥

वर्द्धमानः क्रमात्पित्रोर्मनोरथ इवोन्नतैः ।
सुदर्शनो यथौचित्यं जग्राह सकलाः कलाः ॥ ३९ ॥
कन्यां मनोरमां नाम मनोरमकुलाकृतिम् ।
साक्षादिव रमां श्रेष्ठी [1]तेन तां पर्य्यणाययत् ॥ ४० ॥
सौम्यमूर्त्तिः स हर्षाय पित्रोरिव न केवलम् ।
जज्ञे राज्ञोऽपि लोकस्य सर्वस्य[2] च शशाङ्कवत् ॥ ४१ ॥
इतो नगर्य्यां तत्राभूद्भूपतेर्हृदयङ्गमः ।
पुरोधाः कपिलः प्राज्ञरोधा विद्यामहोदधेः ॥ ४२ ॥
समं सुदर्शनेनास्य मन्मथेन मधोरिव ।
अजायत परा प्रीतिः सर्वदाऽप्यविनश्वरी ॥ ४३ ॥ (युग्मम्)
प्रायः सुदर्शनस्यैव स पुरोधा महात्मनः ।
रौहिणेय इवोष्णांशोः परिपार्श्वमवर्त्तत ॥ ४४ ॥
कपिलं कपिला नाम भार्या ऽपृच्छत्तमन्यदा ।
विस्मरन्नित्यकर्माणि कियत्कालं नु तिष्ठसे[3] ॥ ४५ ॥
पार्श्वे सुदर्शनस्याहं तिष्ठामीति तदीरिते ।
कोऽसौ सुदर्शन इति तयोक्तः प्रत्युवाच सः ॥ ४६ ॥
मम मित्रं सतां धुर्यं विश्वैकप्रियदर्शनम् ।
सुदर्शनं न चेद्वेत्सि तत्त्वं वेत्सि न किञ्चन ॥ ४७ ॥

---

(१) ख च छ तेनाथो- ।
(२) ख च -स्यैव ।
(३) क ग तु तिष्ठसि ।

BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL. 170

NEW SERIES, No 1260. 1259

# योगशास्त्रम् ।

स्वोपज्ञविवरणसहितम् ।

# THE YOGAŚASTRA,

With the commentary called
SVOPAJNAVIVARANA.

BY

ŚRI HEMACHANDRĀCHĀRYA.

EDITED BY

ÇĀSTRA VIÇĀRADA JAINĀCĀRYA

ÇRĪ VIJAYA DHARMA SŪRI.

FASCICULUS III.

Calcutta.

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS.
5, Nandakumar Choudhury's 2nd Lane.
AND PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL, 1, PARK STREET.
1910.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH, 11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

### BIBLIOTHECA INDICA.

*Sanskrit Series*

| | Rs. | |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2, 4 @ /10/ each ... ... | 1 | 4 |
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... .. | 1 | 14 |
| *Agni Purāṇa, Fasc. 6-14 @ /10/ each ... ... ... ... | 5 | 0 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-5 ; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... ... ... | 14 | 6 |
| Aitereya Lochana. ... ... ... ... ... | 2 | 0 |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| *Atharvana Upanishad, Fasc 4-5 @ /10/ each ... ... ... | 1 | 4 |
| Atmatattaviveka, Fasc. I. @ /10/ each ... ... ... .... | 0 | 10 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-7 ; Vol. II. Fasc. 1-6 @ 1/ each .. ... ... ... ... | 13 | 0 |
| Bālam Bhaṭṭi, Vol. I, Fasc. 1-2, Vol 2, Fasc. 1 @ /10/ each ... ... | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc. 1-3 Vol. II, Fasc 1-2 @ /10/ each ... | 3 | 2 |
| *Bhāmati, Fasc. 4-8 @ /10/ each ... .. ... | 3 | 2 |
| Bhaṭṭa Dipikā Vol. I, Fasc. 1-6 ; Vol. 2, Fasc. 1, @ /10 each ... | 4 | 6 |
| Baudhyostatrasangraha ( Tib. & Sans. ) ... ... ... | 2 | 0 |
| Brahma Sutra, Fasc. 1 @ /10/ each ... ... ... ... | 0 | 10 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each ... ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çantideva, Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... ... ... | 0 | 14 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. 1-5, Vol. III, Fasc. 1-7 Vol. 5, Fasc. 1-4 @ /10/ each ... ... ... | 14 | 6 |
| Ditto Vol. 6, Fasc. 1-3 @ 1/4/ each ... ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-3 @ /10/ ... ... ... | 1 | 14 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc. 1-12 @ /10/ each... ... | 8 | 2 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25 ; Vol. III. Part I, Fasc. 1-18. Part II, Fasc. 1-10. Vol. IV. Fasc. 1-6 @ /10/ each .. ... | 36 | 1 |
| Ditto Vol. 4, Fasc. 7, @ 1/4/ each ... ... ... | 1 | 4 |
| Ditto Vol. IV, Fasc. 8-9 @ /10/ ... ... ... | 1 | 4 |
| Çlockavartika, (English) Fasc. 1-7 @ 1/4/ each ... ... ... | 8 | 12 |
| *Çrauta Sūtra of Āpastamba, Fasc. 12-17 @ /10/ each ... ... | 3 | 12 |
| Ditto Çānkhāyana, Vol. I, Fasc. 1-7 ; Vol. II, Fasc. 1-4, Vol. III, Fasc. 1-4 ; Vol 4, Fasc. 1 @ /10/ each ... ... | 10 | 0 |
| Çrī Bhāshyam, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dāna Kriyā kaumudī, Fasc. 1-2 @ /10/ each .. ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol. I; Fasc. 1-7 @ /10/ each ... ... | 4 | 6 |
| Ditto Āchārasārah Vol. II, Fasc. 1-4 @ /10/ each ... ... | 3 | 2 |
| Gobhiliya Grihya Sutra, Vol. I. @ /10/ each ... ... ... | 3 | 2 |
| Ditto Vol. II. Fasc. 1-2 @ 1/4/ each ... ... ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... ... | 0 | 10 |
| Haralata ... ... .. ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. I ... ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... .. ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each ... ... | 17 | 8 |
| *Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... ... ... ... | 4 | 6 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāṣya-pradipōdyōta, Vol. I, Fasc. 1-9 ; Vol. II, Fasc. 1-12 Vol. III, Fasc. 1-10 @ /10/ each ... ... ... ... ... | 19 | 6 |
| Manuṭikā Sangraha, Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |

| | Rs. | As. |
|---|---|---|
| *Mimāṁsā Darçana, Fasc. 6-19 @ /10/ each | 8 | 12 |
| Nyāyavārtika, Fasc. 1-6 @ /10/ each | 3 | 12 |
| *Nirukta, Vol. IV, Fasc. 1-8 @ /10/ each | 5 | 0 |
| *Nitisara, Fasc. 2-5 @ /10/ each | 2 | 8 |
| Nityācārapaddhatiḥ, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Nityācārapradīpaḥ Vol. I, Fasc. 1-8; Vol. II, Fasc. 1. @ /10/ each | 5 | 10 |
| Nyayabinduṭikā, Fasc. 1 @ /10/ each | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-3 @ /10/ each | 5 | 0 |
| Padumawati, Fasc. 1-5 @ 2/ | 10 | 0 |
| Pariçiṣṭa Parvan, Fasc. 3-5 @ /10/ each | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Prithivirāj Rāsa. Part II, Fasc. 1-5 @ /10/ each | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- | 1 | 0 |
| Prākṛta Lakṣaṇam Fasc. 1 @ 1/8/ each | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each | 3 | 12 |
| Saddarsana-Samuccaya, Fasc. 1-4 @ /10/ each | 1 | 4 |
| *Sāma Vēda Saṁhitā, Vols. I, Fasc. 7-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8, @ /10/ each | 19 | 6 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each | 3 | 0 |
| *Sankara Vejaya, Fasc. 2-3 @ /10/ each | 1 | 4 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each | 3 | 12 |
| Sragdharā stotra ( Sanskrit and Tibetan ) | 2 | 0 |
| Srauta Sutra Latyayan, Fasc. 1-9 @ /10/ each | 5 | 10 |
| ,, ,, Asbalayana, Fasc. 4-11 @ /10/ each | 5 | 0 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each | 1 | 0 |
| Suddhikaumudī, Fasc. 1-4 @ /10/ each | 2 | 8 |
| *Taittreya Brahmana, Fasc. 6-25 @ /10/ each | 12 | 8 |
| ,, Pratisakhya, Fasc. 1-3 @ /10/ each | 1 | 14 |
| *Taitteriya Saṁhitā, Fasc. 27-45 @ /10/ each | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc. 7-19 @ /10/ each | 8 | 14 |
| Tantra Vārteka (English) Fasc. 1-6 @ 1/4/ each | 7 | 8 |
| Tattva Cintāmaṇi, Vol. I, Fasc. 1-9, Vol II, Fasc. 2-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each | 23 | 12 |
| Tattvārthadhigama Sutram, Fasc. 1-3 @ /10/ each | 1 | 14 |
| Trikāṇḍa-Maṇḍanam, Fasc. 1-3 @ /10/ each | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5 @ /10/ each | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc. 1-11 @ /10/ each | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/- each | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1-6 @ /10/ each | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3-6; Vol. II, Fasc. 1-7, @ /10/ each | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1-8 Vol. II. Fasc. I @ /10/ each | 5 | 10 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1-6 @ /10/ each | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each | 1 | 14 |
| Yogasāstra of Hemchandra Vol. I. Fasc. 1. ( 200 pages. ) | 1 | 4 |

*Tibetan Series.*

| | Rs. | As. |
|---|---|---|
| Pag-Sam Ṭhi S'iñ, Fasc. 1-4 @ 1/ each | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6, @ 1/ each | 14 | 0 |
| Rtogs brjod dpag hkhri S'iñ ( Tib. & Sans. Avadāna Kalpalatā ) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each | 11 | 0 |

*Arabic and Persian Series.*

| | Rs. | As. |
|---|---|---|
| 'Ālamgirnāmah, with Index, (Text) Fasc. 1-13 @ /10/ each | 8 | 2 |
| Al-Muqaddasi (English) Vol. I. Fasc. 1-3 @ 1/- each | 3 | 0 |
| Āin-i-Akbari, Fasc. 1-22 @ 1/8/ each | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/- each | 34 | 0 |
| Akbarnāmah, with Index, Fasc. 1-37 @ 1/8/ each | 55 | 8 |
| Ditto (English) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-4 @ 1/4/ each | 15 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger, @ /10/ | 0 | 10 |
| *Bādshāhnāmah, with Index, Fasc. 1-19 @ /10/ each | 11 | 14 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each | 31 | 8 |
| Farhang-i-Rashidi, Fasc. 1-14 @ 1/8/ each | 21 | 0 |

*The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

Fihrist-i-Tūsi. or, Tūsy's list of Shy'ah Books, Fasc. 1--4 @ 1/- each ... Rs. 4 0
Futūḥ-ush-Shām of Wāqidī, Fasc. 1--9 @ /10/ each ... ... 5 10
Ditto . . of Āzādi, Fasc. 1--4 @ /10/ each ... ... ... 2 8
Haft Asmān, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... 0 12
History of the Caliphs, (English) Fasc. 1--6 @ 1/4/ each ... ... 7 8
Iqbālnāmah-i-Jahāngīrī, Fasc. 1--3 @ /10/ each ... ... ... 1 14
Iṣābah. with Supplement, 51 Fasc. @ 1/- each ... ... ... 51 0
Ma'āṣir-i-'Ālamgīrī, Fasc. 1--6 @ /10/ each ... .. ... 3 12
Maāṣir-ul-Umarā, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--9 ; Vol. III, 1-10 ; Index to Vol. I, Fasc. 10-11 ; Index to Vol. II, Fasc. 10-12 ; Index to Vol. III, Fasc. 11-12 @ /1/ each ... ... ... 35 0
Maghāzi of Wāqidi, Fasc. 1--5 @ /10/ each ... ... ... 3 2
Muntakhabu-t-Tawārikh, Fasc. 1--15 @ /10/ each ... ... ... 9 6
Ditto ( English ) Vol. I, Fasc. 1--7 ; Vol. II, Fasc. 1--5 and 3 Indexes ; Vol. III, Fasc. 1 @ 1/ each ... ... ... 15 0
Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... ... ... 11 14
Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... 0 10
Niẓāmi's Khiradnāmah-i-Iskandari, Fasc. 1--2 @ /12/ each ... ... 1 8
Riyāẓu-s-Salātīn, Fasc. 1--5 @ /10/ each ... ... ... ... 3 2
Ditto . (English) Fasc. 1--5 @ 1/ ... ... ... 5 0
Tabaquāt-i-Nāṣirī, Fasc. 1--5 @ /10/ each ... ... ... ... 3 2
Ditto (English) Fasc. 1--14 @ 1/ each ... ... ... 14 0
Ditto Index ... ... ... ... ... 1 0
Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni Fasc. 1--7 @ /10/ each ... 4 6
Tārīkh-i-Fīrūzshāhī, of Shams-i-Sirāj Aif, Fasc. 1--6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc. 1--2 @ 1/8/ each ... ... ... 3 0
Tuzuk-i-Jahāngīrī, (Eng.) Fasc. 1 @ 1/ ... ... ... ... 1 0
Wis-o-Rāmin, Fasc. 1--5 @ /10/ each ... ... ... ... 3 2
Zafarnāmah, Vol. I, Fasc. 1--9, Vol. II, Fasc. 1--8 @ /10/ each ... ... 10 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vols. XIX and XX @ 10/ each ... ... 20
2. PROCEEDINGS of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8). 1878 (8), 1879 (7), 1880 (8). 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7). 1888 (7), 1889 (10), 1890 (11), 1891 (7). 1892 (8). 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos. in each Volume.*

4. Journal and Proceedings. N. S., 1905, to date, @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members. ... ...
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... ... 4 0
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... 4 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1884. ... 3 8
8. Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... 40 0
9. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I--III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
10. Tibetan Dictionary, by Csoma de Körös ... ... ... 10 0
11. Ditto Grammar " " ... ... ... 8 0
12. Kaçmīraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... 3 0
13. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson .. ... ... 1 0
14. Memoir on maps illustrating the Ancient Geography of Kasmir, by M. A. Stein PH.D., Jl. Extra No. 2 of 1899 ... ... 4 0
15. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmasi, and edited with notes by Major D. C. Phillott. ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... ... 34 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

3-4-09.

**Books are supplied by V. P. P.**

तं ज्ञापयाधुनापीति तयोक्तः कपिलोऽवदत् ।
असाहृषभदासस्य श्रेष्ठिनस्तनयः सुधीः ॥ ४८ ॥
एष रूपेण पञ्चेषुः कान्त्येन्दुस्तेजसा रविः ।
गाम्भीर्य्येण महाम्भोधिः क्षमया मुनिसत्तमः ॥ ४९ ॥
दानैकचिन्तामाणिक्यं गुणमाणिक्यरोहणः ।
प्रियालापसुधाकुण्डं वसुधामुखमण्डनम् ॥ ५० ॥
खलूक्ता खलु यद्याऽस्य निखिलानपरान् गुणान् ।
गुणचूडामणिः शीलं यस्य न स्खलति क्वचित् ॥ ५१ ॥
कपिला कपिलाच्छ्रुत्वा तद्गुणान् कामविह्वला ।
चक्रेऽनुरागं, चपलाः प्रायेण द्विजयोषितः ॥ ५२ ॥
सुदर्शनाभिसरणोपायं प्रतिदिनं ततः ।
कपिला चिन्तयामास परं ब्रह्मेव योगिनी ॥ ५३ ॥
अपरेद्युर्नृपादेशाद्ग्रामान्तरमुपेयुषि ।
कपिले, कपिलेयाय सुदर्शननिकेतनम् ॥ ५४ ॥
सा मायाविन्यवोचत्तमद्य त्वत्सुहृदो महत् ।
शरीरापाटवं तेन हेतुना नाययाविह ॥ ५५ ॥
अपाटवं त्वद्विरहाद्वपुषो द्विगुणं यतः ।
अतस्त्वामहमाह्वातुं प्रेषिता सुहृदा तव ॥ ५६ ॥
नैतज्ज्ञातं मयेत्युक्त्वा तदैवागात्स तद्गृहम् ।
नान्यमायां हि शङ्कन्ते सन्तः स्वयममायिनः ॥ ५७ ॥
स तत्र प्रविशन्नूचे क्व नाम सुहृदस्ति मे ।
सोवाच गम्यतामग्रे शयानः सुहृदस्ति ते ॥ ५८ ॥

किञ्चिच्च परिहस्याग्रे पुनः प्रोचे सुदर्शनः ।
अत्रापि कपिलो नास्ति किमन्यत्र क्वचिद्ययौ ॥ ५८ ॥
सोवे स्थितो निवातेऽस्ति शरीरापाटवादसौ ।
मूलापवरकं गच्छ वयस्यं तत्र पश्य च ॥ ६० ॥
तत्रापि प्रविवेशायमपश्यन् सुहृदं ततः ।
कपिले ! कपिलः क्वास्तीत्युवाच सरलाशयः ॥ ६१ ॥
अवबध्य ततो द्वारं मदनोद्दीपनानि सा ।
किञ्चित्प्रकाश्य स्वाङ्गानि च्छादयन्त्यच्छवाससा॥६२॥(युग्मम्)
दृढबन्धामपि नीवीं श्लथयित्वाऽभिबध्नती ।
विलोललोचनाऽवोचद्रोमाञ्चोदञ्चिकञ्चुका ॥ ६३ ॥
नास्तीह कपिलस्तस्मात्कपिलां प्रतिजागृहि ।
विभेदो भवतः को वा द्वयोः कपिलयोर्ननु ॥ ६४ ॥
प्रतिजागरितव्यं किं कपिलाया इति ब्रुवन् ।
सुदर्शनो निजगदे पुनः कपिलभार्यया ॥ ६५ ॥
त्वद्वयस्यः शशंस त्वां यदाऽद्भुतगुणं मम ।
ततः प्रभृति मामेष दुनोति मदनज्वरः ॥ ६६ ॥
दिष्ट्या मे विरहार्त्ताया क्षणेनाऽपि त्वदागमः ।
भुवो ग्रीष्माभितप्ताया इव मेघसमागमः ॥ ६७ ॥
अद्य नाथामि तन्नाथ ! मन्मथोन्माथविह्वलाम् ।
निजाश्लेषसुधावर्षैराश्वासय चिराय माम् ॥ ६८ ॥
प्रपञ्चः कोऽप्यसावस्या दुर्विचिन्त्यो विधेरपि ।
धिक् स्त्रीरिति विचिन्त्योचे स प्रत्युत्पन्नधीरिदम् ॥ ६९ ॥

यूनां युक्तमिदं किन्तु [1]पण्डकोऽहमपण्डिते ! ।
मुधा पुरुषवेषेण मदीयेनासि वञ्चिता ॥ ७० ॥
ततो विरक्ता सद्यः सा याहि याहीति भाषिणी ।
द्वारमुद्घाटयामास निर्ययौ च सुदर्शनः ॥ ७१ ॥
स्तोकेन मुक्तो नरकद्वारादस्मीति चिन्तयन् ।
श्रेष्ठिसूनुर्द्रुतपदं प्रपेदे निजमन्दिरम् ॥ ७२ ॥
अतिराक्षसयः कूटादतिशाकिनयश्छलात् ।
अतिविद्युतश्चापलाद्दारुणाः किमपि स्त्रियः ॥ ७३ ॥
एताभ्यो भीरुरस्मीति प्रत्यश्रौषीद्विमृश्य सः ।
नातः परं परगृहे यास्यामि क्वचिदेककः ॥ ७४ ॥
निर्मिमाणः स धर्म्याणि कर्माणि शुभकर्मठः ।
सतां मूर्त्त इवाचारो नावद्यं किञ्चिदाचरत् ॥ ७५ ॥
एकदा तु यथाकालं पुरे तस्मिन्नवर्त्तत ।
समग्रजगदानन्दपदमिन्द्रमहोत्सवः ॥ ७६ ॥
सुदर्शनपुरोधाभ्यां सहोद्यानं ययौ नृपः ।
साक्षादिव शरत्कालचन्द्रागस्तिविराजितः ॥ ७७ ॥
इतः कपिलया युक्ताऽभया भूपतिमन्वगात् ।
समारूढा याप्ययाने विमान इव नाकिनी ॥ ७८ ॥
सुदर्शनस्य भार्याऽपि षड्भिः पुत्रैर्मनोरमा ।
तत्रागादुद्यानमारुह्य सतीधर्म इवाङ्गवान् ॥ ७९ ॥

---

(१) क पण्डको- ।

तां दृष्ट्वा कपिलाऽपृच्छत्केयं स्वामिनि ! वर्णिनी ।
रूपलावण्यसर्वस्वभाण्डागार इवायत: ॥ ८० ॥
ततस्तामभयाऽवादीन्न ज्ञातेयमपि त्वया ।
सुदर्शनस्य गृहिणी गृहलक्ष्मीरिव स्वयम् ॥ ८१ ॥
तच्छ्रुत्वा विस्मिता स्माह कपिला देवि ! यद्यसौ ।
सुदर्शनस्य गृहिणी तदस्या: कौशलं महत् ॥ ८२ ॥
किमस्या: कौशलमिति राज्ञ्योक्ता साऽब्रवीत्पुन: ।
इयन्ति पुत्रभाण्डानि यदसौ समजीजनत् ॥ ८३ ॥
स्वाधीनपतिका पुत्रानङ्गना जनयेद्यदि ।
तत्किं कौशलमित्युक्ताऽभयया कपिलाऽवदत् ॥ ८४ ॥
एवं देवि ! भवत्येव पतिर्यदि पुमान् भवेत् ।
सुदर्शन: पुनरयं [1]षण्ढ: पुरुषवेषभृत् ॥ ८५ ॥
कथमेतत्त्वया ज्ञातं राज्ञ्येति गदिता तत: ।
सा सुदर्शनवृत्तान्तं स्वानुभूतमचीकथत् ॥ ८६ ॥
अभयाऽप्यब्रवीदेवं यद्येवं वञ्चिताऽसि तत् ।
मूढे ! [2]षण्ढ: परस्त्रीषु न त्वयं निजयोषिति ॥ ८७ ॥
ततो विलक्षा कपिला प्रललापेत्यसूयिता ।
वञ्चिता यद्यहं मूढा प्राज्ञाया: किं तवाधिकम् ॥ ८८ ॥
अनयोचे मया मुग्धे ! रागत: पापिना हृत: ।
दृषेल्लावाऽपि नि:संज्ञ: ससंज्ञ: किं पुन: पुमान् ॥ ८९ ॥

(१) क षण्ढ: ।
(२) क षण्ढ: । ख ग षण्ढ: ।

सासूयमूचे कपिलाऽप्येवं मा गर्वमुद्वह।
गर्वं वहसि चेद्देवि! रम्यतां तत्सुदर्शनः॥ ९०॥
व्याजहाराभया देवी साहङ्कारमिदं ततः।
हला! रमितमेवैनं मया विद्धि सुदर्शनम्॥ ९१॥
रमणीभिर्विदग्धाभिः कठोरा वनवासिनः।
तपस्विनोऽपि रमिताः कोऽसौ मृदुमना गृही॥ ९२॥
रमयामि न यद्येनं प्रविशामि तदाऽनलम्।
इत्यालपन्त्यावुद्यानं प्रपेदाते क्षणेन ते॥ ९३॥
[1]तत्रारमयतां स्वैरं नन्दनेऽप्सरसाविव।
अभयाकपिले श्रान्ते स्वं स्वं धाम गते ततः॥ ९४॥
अथ तत्राभया राज्ञी स्वप्रतिज्ञामजिज्ञपत्।
धात्रिकां पण्डितां नाम सर्वविज्ञानपण्डिताम्॥ ९५॥
पण्डिताऽवोचदाः! पुत्रि! न युक्तं मन्त्रितं त्वया।
अद्येऽप्यापि न जानासि धैर्यशक्तिं महात्मनाम्॥ ९६॥
जिनेन्द्रमुनिशुश्रूषानिष्कम्पीकृतमानसः।
सुदर्शनः खल्वसौ तत्प्रतिज्ञां धिगिमां तव॥ ९७॥
अन्योऽपि श्रावको नित्यं परनारीसहोदरः।
किमुच्यते पुनरसौ महासत्त्वशिरोमणिः॥ ९८॥
ब्रह्मचर्यधना नित्यं गुरवो यस्य साधवः।
कथं कार्येत सोऽब्रह्म गुरुशीलाद्युपासकः॥ ९९॥

---

(१) न तत्राचारमतां-।

सदा गुरुकुलासीनो ध्यानमौनाश्रितः सदा ।
आनेतुमभिसर्तुं वा स कथं नाम शक्यते ॥ १०० ॥
वरं फणिफणारत्नग्रहणाय प्रतिश्रवः ।
कदापि न पुनस्तस्य शीलोल्लङ्घनकर्मणि ॥ १ ॥
अथाभयोचे कथमप्येकवारं तमानय ।
तत अहमहं सर्वं करिष्यामि न ते च्छलम् ॥ २ ॥
विचिन्त्य चेतसा किञ्चिदित्यवोचत पण्डिता ।
यद्ययं निश्चयस्ते तदस्त्युपायोऽयमेककः ॥ ३ ॥
पर्वाहे शून्यगेहादौ कायोत्सर्गं करोति सः ।
तथास्थितो यदि परमानेतव्योऽन्यथा तु न ॥ ४ ॥
उपायः साधुरेषोऽस्मिन् यतितव्यं त्वयाऽन्वहम् ।
इत्युक्तवत्यां तात्पर्याद्व्यामोमित्युवाच सा ॥ ५ ॥
ततः परं व्यतीतेषु दिवसेषु कियत्स्वपि ।
विश्वानन्दनकौमुदीमहोत्सव उपाययौ ॥ ६ ॥
अथ राज्ञोत्सवोत्सेकविधित्सोत्सुकचेतसा ।
आरक्षकाः समादिष्टाः पटहेनेत्यघोषयन् ॥ ७ ॥
सर्वर्द्धा सर्वलोकेन कौमुद्युत्सवमीक्षितुम् ।
अद्योद्यानेऽभिगन्तव्यमिति वो राजशासनम् ॥ ८ ॥
प्रातरेष्यच्चतुर्मासधर्मकर्मक्रियोन्मनाः ।
श्रुत्वा सुदर्शनस्तत्तु विषादादित्यचिन्तयत् ॥ ९ ॥
मनःप्रह्वमिदं प्रातश्चैत्यवन्दनकर्मणि ।
उद्यानगतये चैतत्प्रचण्डं राजशासनम् ॥ १० ॥

क उपायो भवत्वेवं तावदित्यभिचिन्त्य सः ।
समर्थ्योपायमं भूमिपतिमेवं व्यजिज्ञपत् ॥ ११ ॥
प्रातः पर्वदिनं युष्मत्प्रसादाद्विदधाम्यहम् ।
देवार्चादीनि तेनोक्तोऽनुमेने तन्महीपतिः ॥ १२ ॥
द्वितीयेऽह्नि जिनेन्द्राणां भक्त्या स्नानं विलेपनम् ।
अर्चां च रचयंश्चैत्यपरिपाट्यां चचार सः ॥ १३ ॥
ततः सुदर्शनो रात्रौ गृहीत्वा पौषधव्रतम् ।
कायोत्सर्गेण कस्मिंश्चित्तस्थौ नगरचत्वरे ॥ १४ ॥
पण्डिताऽप्यभयामूचे कदाचित्ते मनोरथाः ।
पूर्यन्ते परमुद्यानमद्य त्वमपि मा गमः ॥ १५ ॥
शिरो मे बाधत इति कृत्वोत्तरमिलापतेः ।
तस्थौ राज्ञी प्रपञ्चे हि सिद्धसारस्वताः स्त्रियः ॥ १६ ॥
ततो लेप्यमयीं काममूर्त्तिमाच्छाद्य वाससा ।
याने कृत्वा पण्डिताऽगात्प्रवेष्टुं राजवेश्मनि ॥ १७ ॥
किमेतदिति पृच्छद्भिर्वेत्रिभिः स्खलिता तु सा ।
इत्यूचे पण्डिता भाण्डागारिकी कूटसम्पदाम् ॥ १८ ॥
शरीरकारणाद्देवी नाद्योद्यानं ययौ ततः ।
पूजां स्मरादिदेवानां वेश्मन्येव करिष्यति ॥ १९ ॥
इयं प्रवेक्ष्यते तस्मात्प्रतिमा पुष्पधन्वनः ।
अप्यन्यासां देवतानां प्रवेश्या ह्यद्य मूर्त्तयः ॥ २० ॥
तदिमां दर्शयित्वैव याहीति द्वाःस्थभाषिता ।
सा काममूर्त्तिमुद्घाट्यादर्शयच्च जगाम च ॥ २१ ॥

सा प्रतीहारमोहाय गृहीताऽपरमूर्त्तिका ।
[1]द्विस्त्रिश्च प्रविवेशाह्नो नारीणां छद्मकौशलम् ॥ २२ ॥
याने सुदर्शनं न्यस्योत्तरीयेण पिधाय च ।
द्वा:स्थैरस्खलिताऽनीयाऽभयायाः पण्डिताऽर्पयत् ॥ २३ ॥
आविर्विकारा साऽनेकप्रकारं मदनातुरा ।
अभया संक्षोभयितुमित्यभाषत तं ततः ॥ २४ ॥
कन्दर्पो मां दुनोत्येष निःशङ्कं निशितैः शरैः ।
कन्दर्पप्रतिरूप[2]स्तच्छ्रितोऽसि शरणं मया ॥ २५ ॥
शरण्यः शरणायातामार्त्तां त्रायस्व नाथ ! माम् ।
परकार्ये महीयांसो ह्यकार्यमपि कुर्वते ॥ २६ ॥
आनीतश्छद्मनाऽसीति कार्यः कोपस्त्वया न हि ।
कार्ये त्वापि यदार्त्तानां गृह्यते न खलु च्छलम् ॥ २७ ॥
ततः सुदर्शनोऽप्युच्चैः परमार्थविचक्षणः ।
देवताप्रतिमिवास्थात्कायोत्सर्गेण निश्चलः ॥ २८ ॥
पुनरप्यभयाऽवादी[3]द्धावहावमनोहरम् ।
नाथ ! सम्भाषमाणां मां तूष्णीकः किमुपेक्षसे ॥ २९ ॥
व्रतकष्टमिदं मुञ्च मा कृथास्त्वमतः परम् ।
मत्संप्राप्त्या व्रतफलं विद्धि संसिद्धमात्मनः ॥ ३० ॥

---

(१) च द्विस्त्रिश्चतर्विवेशाह्नो ।
(२) क ख च -पस्त्वं श्रितोऽसि ।
(३) ख च -तृ हावभाव- ।

ताम्यन्तीं याचमानां मां नम्रां मानय मानद ! ।
दैवात्पतितमुत्सङ्गे रत्नं गृह्णासि किं नहि ॥ ३१ ॥
[1]कियद्यापि सौभाग्यगर्वमुद्घाटयिष्यसि ।
इत्यालपन्त्या जगृहे तया पाणौ स पाणिना ॥ ३२ ॥
निबिडं मण्डलीभूतपीनोत्तुङ्गस्तनं तया ।
भुजाभ्यां पद्मिनीनालमृदुलाभ्यां स सस्वजे ॥ ३३ ॥
एवं तदुपसर्गेषु निसर्गेण स धीरधीः ।
धर्मध्याने निश्चलोऽभूत् किं चलत्यचलः क्वचित् ॥ ३४ ॥
स दध्यौ चेति चेन्मुच्ये कथञ्चिदङ्गमितया ।
पारयामि तदोत्सर्गमन्यथाऽनशनं मम ॥ ३५ ॥
अमानिताऽथ घटितभ्रुकुटिः कुटिलाशया ।
अभया तं भापयितुमित्यभाषत निर्भया ॥ ३६ ॥
मुमूर्षो ! मूर्ख ! माकार्षीर्मान्याया मेऽव[2]माननाम् ।
न वेत्सि मानिनी नृणां निग्रहानुग्रहक्षमा ॥ ३७ ॥
मनोभववशाया मे वशमाविश रे जड ! ।
नो चेदवशं यास्यस्यत्र नास्त्येव संशयः ॥ ३८ ॥
इति संरम्भकाष्ठायां साऽऽरुरोह यथा यथा ।
धर्मध्याने महात्माऽसा[3]वारुरोह तथा तथा ॥ ३९ ॥

(१) क किं यद्यद्यापि ।
(२) क -माननम् । ख ग घ -मेव मान्यताम् ।
(३) घ व चारुरोह ।

एवं कदर्थितो रात्रिं तया ध्यानान्न सोऽचलत् ।
किं क्षुभ्यति महाम्भोधिः क्वापि नौदण्डताडनैः ॥ ४० ॥
ततः प्रेक्ष्य प्रभातं सा स्वं लिलेख नखैर्वपुः ।
कोऽप्यसौ मे बलात्कारकारीत्युच्चै रराস च ॥ ४१ ॥
ततः प्राहरिकास्तत्र संभ्रान्ता यावदागमन् ।
कायोत्सर्गस्थितं तावद्ददृशुस्ते सुदर्शनम् ॥ ४२ ॥
असम्भवत्येतदिति द्रुतमुपेत्य ते: ।
विज्ञप्तो भूपतिस्तत्रायर्यौ पप्रच्छ चाभयाम् ॥ ४३ ॥
सोचे संपृच्छ्य देव ! त्वामहं यावदिह स्थिता ।
एषोऽकस्मादिहायातो दृष्टस्तावत्पिशाचवत् ॥ ४४ ॥
एष मेष इवोन्मत्तो मन्मथव्यसनी ततः ।
रिरंसुर्मामयाचिष्ट पापिष्ठश्चाटुकोटिभिः ॥ ४५ ॥
ऊचे मयैष रे मेषीरसतीवसतीरपि ।
शक्यन्ते हि चणकवन्मरिचानि न चर्वितुम् ॥ ४६ ॥
ततः परं बलात्कारादेष एवं चकार मे ।
मया च पूत्कृतमन्यदबलानां बलं नहि ॥ ४७ ॥
असम्भिदमसम्भाव्यमिति मत्वा महीपतिः ।
किमेतदिति पप्रच्छ बहुधैव सुदर्शनम् ॥ ४८ ॥
पृष्टोऽपि राज्ञा कृपया किञ्चिन्नोचे सुदर्शनः ।
परतापोपशान्त्यै हि निघृष्टमपि चन्दनम् ॥ ४९ ॥
ततः सम्भावयामास दोषं तस्यापि भूपतिः ।
पारदारिकदस्यूनां तूष्णीकत्वं हि लक्षणम् ॥ ५० ॥

इत्यादिदेश स क्रोधात्तकलेऽप्यत्र पत्तने ।
दोषप्रख्यापनां कृत्वा पाप एष निगृह्यताम् ॥ ५१ ॥
आरक्षपुरुषैर्दोर्भ्यां स धृत्वोत्पाटितस्ततः ।
वचसा सिद्धयो राज्ञां मनसेव दिवौकसाम् ॥ ५२ ॥
स मषिकृती मुखे मध्या शरीरे रक्तचन्दनैः ।
करवीरस्रजा मुण्डे कण्ठे [1]कोशकमालया ॥ ५३ ॥
खरमारोप्य विधृतसूर्पच्छत्रः स तैस्ततः ।
वाद्यमानेनानकेनारेभे भ्रमयितुं पुरे ॥ ५४ ॥
कृतापराधः शुद्धान्ते बध्यतेऽसौ सुदर्शनः ।
नात्रदोषो नृपस्येति चक्रुराघोषणां च ते ॥ ५५ ॥
न युक्तं सर्वथाऽप्येतन्नेह सम्भवतीदृशम् ।
इति लोकप्रघोषोऽभूद् हाहारवयुतस्ततः ॥ ५६ ॥
एवं च भ्राम्यमाणोऽगाद् द्वारदेशे स्ववेश्मनः ।
अदृश्यत महासत्या स मनोरमयाऽपि च ॥ ५७ ॥
चिन्तयामास सा चैवं सदाचारः पतिर्मम ।
भूपतिश्च प्रियाचारो दुराचारो विधिर्ध्रुवम् ॥ ५८ ॥
इदमप्यसदथवा भुवमस्य महात्मनः ।
उपस्थितं फलमिदं प्राक्तनाशुभकर्मणः ॥ ५९ ॥

---

(१) क कौशिकमालया ।

(२) ङ विधृतसूर्पच्छत्रयतैस्ततः । ख विधृतः सूर्पच्छत्रयतैस्ततः ।
च विधृतः सूर्पैश्छत्रयतैस्ततः ।

कोऽपि नास्य प्रतीकारस्तथाप्येष भविष्यति ।
निश्चित्येति प्रविश्यान्तर्जिनार्चाः साऽर्चयत्ततः ॥ ६० ॥
कायोत्सर्गेण च स्थित्वा सोचे शासनदेवताः ।
भगवत्यो मम पत्युर्दोषसम्भावनाऽपि न ॥ ६१ ॥
परमश्रावकस्यास्य सान्निध्यं चेत्करिष्यथ ।
तदाऽहं पारयिष्यामि कायोत्सर्गमिमं खलु ॥ ६२ ॥
अन्यथैवंस्थिताया मे भवत्वनशनं ध्रुवम् ।
धर्मध्वंसे पतिध्वंसे किं जीवन्ति कुलस्त्रियः ? ॥ ६३ ॥
इतश्च न्यधुरारक्षाः शूलिकायां सुदर्शनम् ।
अलङ्घनीया भृत्यानां राजाज्ञा हि भयङ्करा ॥ ६४ ॥
स्वर्णाब्जासनतां भेजे शूलाऽप्यस्य महात्मनः ।
देवतानां प्रभावेन यमदंष्ट्राऽपि कुण्ठति ॥ ६५ ॥
वधाय तस्य चारक्षैर्दृढं व्यापारितः शितः ।
करवालोऽपतत्कण्ठे पुष्पमाला च सोऽभवत् ॥ ६६ ॥
तद्दृष्ट्वा चकितैरेत्य विज्ञप्तस्तैर्महीपतिः ।
आरुह्य हस्तिनीं वेगाद्ययावधिसुदर्शनम् ॥ ६७ ॥
तमालिङ्ग्य महीपालोऽनुतापादित्यवोचत ।
श्रेष्ठिन्नहि विनष्टोऽसि दिष्ट्याऽऽत्मीयप्रभावतः ॥ ६८ ॥
मया हि तावत्पापेन किं राज्ञाऽसि विनाशितः ।
नाथः सतामनाथानां धर्मो जागर्त्ति सर्वथा ॥ ६९ ॥
स्त्रीणां मायाप्रधानानां प्रत्ययात्त्वां निहन्ति यः ।
अविमृश्यकरः पापो नापरो दधिवाहनात् ॥ ७० ॥

किं च किञ्चिदिदं पापं भवताऽप्यस्मि कारितः ।
असत्कथ्यमया साधो ! तदा पृष्टोऽपि नावदः ॥ ७१ ॥
एवमालपता राज्ञा करिस्कन्धमधिरोप्य सः ।
नीत्वा स्वहर्म्ये स्नपितश्चन्दनैश्च विलेपितः ॥ ७२ ॥
वस्त्रालङ्कारजातञ्च परिधाप्य सुदर्शनः ।
राज्ञा पृष्टो रात्रिवृत्तं यथातथमचीकथत् ॥ ७३ ॥
अथ राज्ञीं प्रति क्रुद्धो भूपतिर्निग्रहोद्यतः ।
सुदर्शनेन व्यषेधि शिरः प्रक्षिप्य पादयोः ॥ ७४ ॥
[1]ततः श्रेष्ठी नृपेणेभमारोप्य पुरमध्यतः ।
महाविभूत्या तद्वेश्म नायितो न्यायतायिना ॥ ७५ ॥
अभयाऽप्येतदाकर्ण्योद्बध्यात्मानं व्यपद्यत ।
परद्रोहकराः पापाः स्वयमेव पतन्ति हि ॥ ७६ ॥
पण्डिताऽपि प्रनश्यागात्पाटलीपुत्रपत्तनम् ।
अवसद्देवदत्ताया गणिकायाश्च सन्निधौ ॥ ७७ ॥
तत्रापि पण्डिता नित्यं तथाऽऽशंसत्सुदर्शनम् ।
दर्शनेऽस्य यथा देवदत्ताऽभूद्भृशमुत्सुका ॥ ७८ ॥
सुदर्शनोऽपि संसारविरक्तो व्रतमग्रहीत् ।
उपसृत्य गुरोः पार्श्वे रत्नमम्भोनिधेरिव ॥ ७९ ॥
तपःक्षमाङ्ग एकाङ्गविहारप्रतिमास्थितः ।
स क्रमाद्विहरन् प्राप पाटलीपुत्रपत्तनम् ॥ ८० ॥

---

(१) ख च अथ ।

भिक्षार्थं पर्यटंस्तत्र दृष्टः पण्डितया च सः ।
कथितो देवदत्तायाः सा तया तमजूहवत् ॥ ८१ ॥
भिक्षाव्याजात्तयाऽऽहूतस्तत्रापि स मुनिर्ययौ ।
विमर्शमविधायैव सापायनिरपाययोः ॥ ८२ ॥
देवदत्ता ततो द्वारं पिधाय तमनेकधा ।
दिनं कदर्थयामास चुक्षोभ स मुनिर्न तु ॥ ८३ ॥
अथ [१]मुक्तोऽनया सायमुद्यानं गतवानसौ ।
तत्रापि दृष्टोऽभयया व्यन्तरीभूतया तया ॥ ८४ ॥
कदर्थयितुमारेभे प्राक्कर्मस्मरणादसौ ।
ऋणं वैरं च जन्तूनां नश्येज्जन्मान्तरेऽपि न ॥ ८५ ॥
क्लिश्यमानो बहु तया महासत्त्वः सुदर्शनः ।
आरोहत् क्षपकश्रेणिमपूर्वकरणक्रमात् ॥ ८६ ॥
ततः स भगवान् प्राप केवलज्ञानमुज्ज्वलम् ।
तस्य केवलमहिमा सद्यश्चक्रे सुरासुरैः ॥ ८७ ॥
उद्दिधीर्षुर्भवाज्जन्तून् स चक्रे धर्मदेशनाम् ।
लोकोदयायाभ्युदयस्तादृशानां हि जायते ॥ ८८ ॥
तस्य देशनया तत्राबुध्यन्तान्ये न केवलम् ।
देवदत्ता पण्डिता च व्यन्तरी च व्यबुध्यत ॥ ८९ ॥

स्त्रीसन्निधावपि तदेवमदूषितात्मा
जन्तून् प्रबोध्य शुभदेशनया क्रमेण ।

(१) ख ङ मुक्तस्तया साय- । च मुक्तस्तया सोऽय- ।

स्थानं सुदर्शनमुनिः परमं प्रपेदे
जैनेन्द्रशासनजुषां न हि तद्दुरापम् ॥ १८० ॥

॥ इति सुदर्शनऋषिकथानकम् ॥ १०१ ॥

धर्म्ये कर्मणि न पुरुषा एवाधिक्रियन्ते किन्तु स्त्रीणामप्यधिकारश्चतुर्वर्णे सङ्घे तासामप्यङ्गभूतत्वात् ततः पुरुषस्य परदारप्रतिषेधवत् स्त्रीणां परपुरुषगमनं प्रतिषेधयति—

ऐश्वर्यराजराजोऽपि रूपमीनध्वजोऽपि च ।
सीतया रावण इव त्याज्यो नार्या नरः परः ॥ १०२ ॥

ऐश्वर्येण विभवेन, राजराजो धनदः स इव राजराजः, आस्तामितरः । रूपेण सौन्दर्येण, मीनध्वजोऽपि स्मरोऽपि, आस्तामन्यः । त्याज्यः परिहरणीयः, नार्य्या स्त्रिया, परः स्वपतेरन्यो, नरः पुरुषः, क इव कया, सीतया रावण इव । सीताचरितमुक्तमेव ॥ १०२ ॥

स्त्रीपुंसयोर्द्वयोरपि परकान्तासक्तत्वस्य फलमाह—

नपुंसकत्वं तिर्यक्त्वं दौर्भाग्यं च भवे भवे ।
भवेन्नराणां स्त्रीणां चान्यकान्तासक्तचेतसाम् ॥ १०३ ॥

नपुंसकत्वं षण्ढत्वं, तिर्यक्त्वं तिर्यग्भावः, दौर्भाग्यमनादेयता, भवे भवे जन्मनि जन्मनि, भवेत् जायेत, नराणां स्त्रीणां च । अन्यकान्तासक्तचेतसामिति । श्लिष्टं द्वयोर्विशेषणम् । यदा

पुरुषाणां तदा अन्यस्य कान्ता भार्या अन्यकान्ता तदासक्तचेत-साम्। यदा तु स्त्रीणां तदा अन्यः पत्युरपरः स चासौ कान्तश्च कामयिता तत्रासक्तचेतसाम् ॥ १०३ ॥

अब्रह्मनिन्दां कृत्वा ब्रह्मचर्यस्यैहिकं गुणमाह—

प्राणभूतं चरित्रस्य परब्रह्मैककारणम्।
समाचरन् ब्रह्मचर्यं पूजितैरपि पूज्यते ॥ १०४ ॥

प्राणभूतं जीवितभूतं, चरित्रस्य देशचारित्रस्य सर्वचारित्रस्य च, परब्रह्मणो मोक्षस्य, एकमद्वितीयं, कारणं समाचरन् पालयन्, ब्रह्मचर्यं जितेन्द्रियस्योपस्थनिरोधलक्षणं पूजितैरपि सुरासुरमनु-जेन्द्रैः न केवलमन्यैः पूज्यते, मनोवाक्कायोपचारपूजाभिः ॥ १०४ ॥

ब्रह्मचर्यस्य पारलौकिकं गुणमाह—

चिरायुषः सुसंस्थाना दृढसंहनना नराः।
तेजस्विनो महावीर्या भवेयुर्ब्रह्मचर्यतः ॥ १०५ ॥

चिरायुषो दीर्घायुषोऽनुत्तरसुरादिषूत्पादात्, शोभनं संस्थानं समचतुरस्रलक्षणं येषां ते सुसंस्थानाः अनुत्तरसुरादिषूत्पादादेव, दृढं बलवत् संहननमस्थिसञ्चयरूपं वज्रऋषभनाराचाख्यं येषां ते दृढसंहननाः, एतच्च मनुजभवेषूत्पद्यमानानां देवेषु संहननाभावात्, तेजः शरीरकान्तिः प्रभावो वा विद्यते येषां ते तेजस्विनः, महावीर्या बलवत्तमाः तीर्थंकरचक्रवर्त्यादित्वेनोत्पादात्, भवेयु-र्जायेरन्, ब्रह्मचर्यतो ब्रह्मचर्यानुभावात् ॥

यथान्तरश्लोकाः—

पश्यन्ति कृष्णकुटिलां कबरीमेव योषिताम्।
तदभिव्यङ्ग्यमात्मानं न दुष्कर्मपरम्पराम्॥ १॥
सीमन्तिनीनां सीमन्तः पूर्णः सिन्दूररेणुना।
पन्थाः सीमन्तकाख्यस्य नरकस्येति लक्ष्यताम्॥ २॥
भ्रूवल्लरीं वर्णिनीनां वर्णयन्ति न जानते।
मोक्षाध्वनि प्रस्थितानां पुरोगामुरगीमिमाम्॥ ३॥
भङ्गुरायतनापाङ्गामङ्गनानां निरीक्षते।
हतबुद्धिर्न तु निजं भङ्गुरं हन्त जीवितम्॥ ४॥
नासावंशं प्रशंसन्ति स्त्रीणां सरलमुन्नतम्।
निजवंशं न पश्यन्ति भ्रश्यन्तमनुरागिणः॥ ५॥
स्त्रीणां कपोले संक्रान्तमात्मानं वीक्ष्य हृष्यति।
संसारसरसीपङ्के मज्जन्तं वेत्ति नो जडः॥ ६॥
पिबन्ति रतिसर्वस्वबुद्ध्या बिम्बाधरं स्त्रियाः।
न बुध्यन्ते यत्कृतान्तः पिबत्यायुर्दिवानिशम्॥ ७॥
योषितां दशनान् कुन्दसोदरान् बहु मन्यते।
स्वदन्तभङ्गं नेक्षन्ते तरसा जरसा कृतम्॥ ८॥
स्मरदोलाधिया कर्णपाशान् पश्यति योषिताम्।
कण्ठोपकण्ठलुठितान् कालपाशांस्तु नात्मनः॥ ९॥
योषितां प्रोषितमतिर्मुखं पश्यत्यनुक्षणम्।
क्षणोऽपि हन्त नास्यस्य कृतान्तमुखवीक्षणे॥ १०॥

नरः स्मरपराधीनः स्त्रीकण्ठमवलम्बते ।
नात्मनो वेत्त्यसूनद्य स्वो वा कण्ठावलम्बिनः ॥ ११ ॥
स्त्रीणां भुजलताबन्धं बन्धुरं बुध्यते कुधीः ।
न कर्मबन्धमेवं स्वमात्मानमनुशोचति ॥ १२ ॥
धत्ते स्त्रीपाणिभिः स्पृष्टो [1]हृष्टो रोमाञ्चकण्टकान् ।
स्मारयन्ति न किं तेऽस्य कूटशाल्मलिकण्टकान् ॥ १३ ॥
कुचकुम्भौ समालिङ्ग्य स्त्रियाः शेते सुखं जडः ।
विस्मृता नूनमेतस्य कुम्भीपाकोद्भवा व्यथा ॥ १४ ॥
मध्यमध्यासते मुग्धा मुग्धास्त्रीणां क्षणे क्षणे ।
एतन्मध्यं भवाम्भोधेरिति नैते[2] विविञ्चते ॥ १५ ॥
धिगङ्गनानां त्रिवलीतरङ्गैर्ह्रियते [3]जनः ।
त्रिवलीछद्मना ह्येतत्तु वैतरणीत्रयम् ॥ १६ ॥
स्मरार्त्तं मज्जति मनः पुंसां स्त्रीनाभिवापिषु ।
प्रमादेनापि किं नेदं साम्याम्भसि सुदास्पदे ॥ १७ ॥
स्मरारोहणनिःश्रेणीं स्त्रीणां रोमलतां विदुः ।
नराः संसारकारायां न पुनर्लोहशृङ्खलाम् ॥ १८ ॥
अधन्या जघनं स्त्रीणां भजन्ति विपुलं मुदा ।
संसारसिन्धोः पुलिनमिति नूनं न जानते ॥ १९ ॥
भजते करभोरूणामूरूनल्पमतिर्नरः ।
अनूरूभ्रियमाणं तैः सन्नती स्वं न बुध्यते ॥ २० ॥

---

(१) ख नरो- ।　　(३) ख मनः ।
(२) ख च, नैवं ।

स्त्रीणां पादैर्हन्यमानमात्मानं बहु मन्यते ।
हताशो न तु जानाति क्षिप्यमाणमधोगतौ ॥ २१ ॥
दर्शनात् स्पर्शनाच्छ्लेषाद् या हन्ति शमजीवितम् ।
हेयोग्रविषनागीव वनिता सा विवेकिभिः ॥ २२ ॥
इन्दुलेखेव कुटिला सन्ध्येव क्षणरागिणी ।
निम्नगेव निम्नगतिर्वर्जनीया नितम्बिनी[1] ॥ २३ ॥
न प्रतिष्ठां न सौजन्यं न दानं नच गौरवम् ।
नच स्वान्यहितं [2]वामाः पश्यन्ति मदनान्धलाः ॥ २४ ॥
निरङ्कुशा नरे नारी तत्करोत्यसमञ्जसम् ।
यत्क्रुद्धाः सिंहशार्दूलव्याला अपि न कुर्वते ॥ २५ ॥
दूरतस्ताः परित्याज्याः प्रादुर्भावितदुर्मदाः ।
विश्वोपतापकारिण्यः करिण्य इव योषितः ॥ २६ ॥
स कोऽपि स्मर्यतां मन्त्रः स देवः कोऽप्युपास्यताम् ।
न येन स्त्रीपिशाचीयं ग्रसते शीलजीवितम् ॥ २७ ॥
शास्त्रेषु श्रूयते यच्च यच्च लोकेषु गीयते ।
संवादयन्ति दुःशीलं तन्नार्य्यः कामविह्वलाः ॥ २८ ॥
संपिण्ड्याखाहिदंष्ट्राग्नियमजिह्वाविषाङ्कुरान् ।
जगज्जिघांसुना नार्य्यः कृताः क्रूरेण वेधसा ॥ २९ ॥
यदि स्थिरा भवेद्विद्युत्तिष्ठन्ति यदि वायवः ।
दैवात्तथापि नारीणां न स्त्रेणा स्थीयते मनः ॥ ३० ॥

---

(१) ख निरन्तरम् ।
(२) क ङ रामाः ।

यद्विना मन्त्रतन्त्राद्यैर्वञ्चयन्ते चतुरा अपि ।
इन्द्रजालमिदं हन्त नारीभिः शिक्षितं कुतः ॥ ३१ ॥
अपूर्वा वामनेत्राणां मृषावादेषु वैदुषी ।
प्रत्यक्षाण्यप्यकृत्यानि यदपह्नुवते क्षणात् ॥ ३२ ॥
पीतोन्मत्तो यथा लोष्टं सुवर्णं मन्यते जनः ।
तथा स्त्रीसङ्गजं दुःखं सुखं मोहान्धमानसः ॥ ३३ ॥
जटी मुण्डी शिखी मौनी नग्नो वल्की तपस्व्यथ ।
ब्रह्माऽप्यब्रह्मशीलश्चेत्तदा मह्यं न रोचते ॥ ३४ ॥
कण्डूयन् कच्छुरः कच्छूं यथा दुःखं सुखीयति ।
दुर्वारमन्मथावेशविवशो मैथुनं तथा ॥ ३५ ॥
नार्यो यैरुपमीयन्ते काञ्चनप्रतिमादिभिः ।
आलिङ्ग्यालिङ्ग्य तान्येव किमु कामी न तृप्यति ॥ ३६ ॥
यदेवाङ्गं कुत्सनीयं गोपनीयं च योषिताम् ।
तत्रैव हि जनो रज्येत् केनान्येन विरज्यताम् ॥ ३७ ॥
मोहादहह नारीणामङ्गैर्मांसास्थिनिर्मितैः ।
चन्द्रेन्दीवरकुन्दादि सदृक्षीकृत्य दूषितम् ॥ ३८ ॥
नारीं नितम्बजघनस्तनभूरिभारा-
मारोपयन्त्युरसि मूढधियो रताय ।
संसारवारिनिधिमध्यनिमज्जनाय
जानन्ति तां नहि शिलां निजकण्ठबद्धाम् ॥ ३९ ॥
भवोदन्वद्वेलां मदनमृगयुव्याधहरिणीं
मदावस्थाशालां विषयमृगतृष्णामरुभुवम् ।

महामोहध्वान्तोच्चयबहुलपक्षान्तरजनीम्

विपत्खानिं नारीं परिहरत हे आत्मसुधियः! ॥४०॥१०५॥

संप्रति मूर्च्छाफलमुपदर्शयंस्तन्नियन्त्रणारूपं पञ्चममणुव्रतमाह—

**असन्तोषमविश्वासमारम्भं दुःखकारणम्।**

**मत्वा मूर्च्छाफलं कुर्यात्परिग्रहनियन्त्रणम् ॥ १०६ ॥**

दुःखकारणमित्यसन्तोषादिभिस्त्रिभिः प्रत्येकमभिसंबध्यते। असन्तोषादीनि दुःखकारणानि मूर्च्छाया गर्द्धस्य फलत्वेन विज्ञाय मूर्च्छाहेतोः परिग्रहस्य नियन्त्रणं नैयत्यमुपासकः कुर्यादिति योगः। तत्रासन्तोषस्तृप्त्यभावः, स दुःखकारणम्। मूर्च्छावान् हि बहुभिरपि धनैर्न संतुष्यति, उत्तरोत्तराशाकदर्थितो दुःखमेवानुभवति। परसंपदुत्कर्षश्च हीनसंपदमसन्तुष्टं दुःखाकरोति।

यदाह—

असन्तोषवतां पुंसामपमानः पदे पदे।

सन्तोषैश्वर्यसुखिनां दूरे दुर्जनभूमयः॥ १ ॥

अविश्वासः खल्वपि दुःखकारणम्, अविश्वस्तो ह्यात्मीयेभ्योऽपि शङ्कमानः स्वधनस्य रक्षां कुर्वन्न क्वचिद्विश्वसिति।

यदाह—

[1]उक्खणइ खणइ निहणइ रत्तिं न सुअइ दिआवि अ ससंको।

लिंपइ ठवेइ सययं लंछियपडिलंछियं कुणइ॥ १ ॥

---

(1) उत्खनति खनति निहन्ति रात्रिं न स्वपिति दिवाऽपि च सशङ्कः।

लिम्पति स्थापयति सततं लाञ्छितप्रतिलाञ्छितं करोति॥ १॥

मूर्च्छापरिगतश्चारम्भं प्राणातिपातादिकं प्रतिपद्यते ।

तथाहि—

तनयः पितरं पिता च तनयं भ्राता च भ्रातरं हिनस्ति, गृहीतलञ्चश्च कूटसाचित्वदायी बहुनृतं भाषते, बलप्रकर्षात्पथिकजनं मुष्णाति, खनति खात्रं, गृह्णाति विम्बं, धनलोभात् परदारानभिगच्छति, तथा सेवाकृषिपाशुपाल्यवाणिज्यादि च करोति । मन्मथवणिगिव नद्यादिषु प्रविश्य काष्ठान्याकर्षति । ननु दुःखकारणं मूर्च्छाफलं ज्ञात्वा परिग्रहनियन्त्रणं कुर्यादिति कैयं वाचो युक्तिः । उच्यमत्र । मूर्च्छाकारणत्वात् परिग्रहोऽपि मूर्च्छैव ; अथवा "मूर्च्छा परिग्रहः" इति सूत्रकारवचनात् मूर्च्छैव परिग्रह इति निश्चयनयमतेनोच्यते, मूर्च्छामन्तरेण धनधान्यादेरपरिग्रहत्वात् ।

यदाह—

अपरिग्रह एव भवेद्वस्त्राभरणाद्यलङ्कृतोऽपि पुमान् ।
ममकारविरहितः [1]सति ममकारे [2]सङ्गवान्नग्नः ॥ १ ॥

तथा—

ग्रामं गेहं च विशन् कर्म च नोकर्म चाददानोऽपि ।
अपरिग्रहोऽममत्वोऽपरिग्रहो नान्यथा क्वचित् ॥ १ ॥

---

(१) ख ग सनृ ।
(२) ख सङ्गवान ? गः ।

तथा—

[1]जं पि वत्थं व पायं वा कंबलं पायपुंछणं ।
तं पि संजमलज्जट्ठा धारंति परिहरंति य ॥ १ ॥
[2]न सो परिग्गहो वुत्तो नायपुत्तेण ताइणा ।
मुच्छा परिग्गहो वुत्तो इइ वुत्तं महेसिणा ॥ २ ॥

इति सर्वमवदातम् ॥ १०६ ॥

प्रकारान्तरेण परिग्रहनियमणमाह—

**परिग्रहमहत्त्वाद्धि मज्जत्येव भवाम्बुधौ ।**
**महापोत इव प्राणी त्यजेत्तस्मात् परिग्रहम् ॥१०७॥**

परिगृह्यत इति परिग्रहो धनधान्यादिस्तस्य महत्त्वं निरवधित्वं तस्माद्धेतोः मज्जत्येव, अवश्यमेव मज्जति, प्राणी शरीरी, भवे संसारे, क इव क, अम्बुधौ समुद्रे महापोत इव महायानपात्रमिव, यथा निरवधिधनधान्यादिभाराक्रान्तः पोतः समुद्रे मज्जति, तथैवापरिमितपरिग्रहः प्राणी नरकादौ निमज्जति ।

यदाहुः—

---

(१) यदपि वस्त्रं वा पात्रं वा कम्बलं वा पादप्रोञ्छनम् ।
तदपि संयमलज्जार्थं धारयन्ति परिभुञ्जते च ॥ १ ॥

(२) न स परिग्रह उक्तः ज्ञातपुत्रेण तायिना ।
मूर्च्छा परिग्रह उक्तः इत्युक्तं महर्षिणा ॥ २ ॥

'महारंभयाए महापरिग्गहयाए कुणिमाहारेणं पंचिंदियवहेणं जीवा नरयाउयं बज्झंति ।

तथा बह्वारम्भपरिग्रहत्वं च नारकस्यायुष इति यस्मादेवं तस्मात्त्यजेत्त्यजेत् परिग्रहं धनधान्यादिरूपं मूर्च्छारूपं वा ॥ १०७ ॥

सामान्येन परिग्रहदोषानाह—

त्रसरेणुसमोऽप्यत्र न गुणः कोऽपि विद्यते ।
दोषास्तु पर्वतस्थूलाः प्रादुष्षन्ति परिग्रहे ॥१०८॥

त्रसरेणवो गवाक्षजालान्तःप्रविष्टसूर्यकिरणोपलक्ष्याः सूक्ष्मा द्रव्यविशेषास्तत्समोऽपि तत्प्रमाणोऽपि अत्र परिग्रहे न कश्चन गुणोऽस्ति, नहि परिग्रहबलादामुष्मिकः पुरुषार्थः सिद्ध्यति । यस्तु भोगोपभोगादिः स न गुणः प्रत्युत गर्द्धहेतुत्वाद्दोष एव । योऽपि जिनभवनविधानादिलक्षणः परिग्रहस्य गुणः शास्त्रे वर्ण्यते न स गुणः, किं तु परिग्रहस्य सदुपयोगव्यावर्णनं न तु तदर्थमेव परिग्रहधारणं श्रेयः ।

यदाहुः—

धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १ ॥

---

(१) महारम्भतया महापरिग्रहतया कुणिमाहारेण पञ्चेन्द्रियवधेन जीवा नरकायुष्कमर्जन्ति ।

तथा—

'कंचणमणिसोवाणं थंभसहस्सोसियं सुवस्रतलं।

जो कारिज्ज जिणहरं तओवि तवसंजमो ²अहिओ* ॥ १ ॥

व्यतिरेकमाह—

दोषास्तु, दोषाः पुनः पर्वतस्थूला अतिमहान्तो वक्ष्यमाणाः परिग्रहे सति प्रादुष्षन्ति प्रादुर्भवन्ति ॥ १०८ ॥

दोषास्तु पर्वतस्थूला इति यदुक्तं तत् प्रपञ्चयति—

**सङ्गाद्भवन्त्यसन्तोऽपि रागद्वेषादयो द्विषः।**

**मुनेरपि चलेच्चेतो यत्तेनान्दोलितात्मनः ॥१०९॥**

सङ्गात्परिग्रहाद्वेतोर्भवन्ति प्रादुर्भवन्ति असन्तोऽपि उदयावस्थामप्राप्ता अपि रागद्वेषप्रभृतयः शत्रवः। सङ्गवतो हि तन्निबन्धनो रागः प्रादुर्भवति। सङ्गप्रतिपन्थिषु च द्वेषः, एवं मोहभयादयो वधबन्धादयो नरकपातादयश्च द्रष्टव्याः। तदिदं पर्वतस्थूलत्वं दोषाणाम्। कथमसन्तोऽपि रागादयो भवन्तीति, उच्यते,

---

(१) काञ्चनमणिसोपानं स्तम्भसहस्रोच्छ्रितं सुवर्णतलम्।
य: कारयेज्जिनगृहं ततोऽपि तपःसंयमोऽधिकः ॥ १ ॥

(२) क ख ड ठ अणंतगुणो।

* संबोधसत्तरिकायां तु—

कंचणमणिसोवाणे थम्भसहस्सूसिए सुवस्रतले।
जो कारवेज्ज जिणहरे तओवि तवसंजमो अणंतगुणो त्ति ॥

एवं पाठो दृश्यते।

यत् यस्मान्मुनेरपि आस्तामन्यस्य चलेत् प्रशमावस्थायाश्चवेत् चेतो मनः तेन सङ्गेन आन्दोलितात्मन अस्थिरीकृतात्मनः। मुनिरपि हि सङ्गानङ्गीकुर्वन्मुनित्वाद् भ्रश्यत्येव।

यदाह—

> '[1]छेओ भेओ वसणं आयासकिलेसभयविवागो अ।
> मरणं धम्मब्भंसो अरई अत्थाओ सव्वाइं॥ १॥
> '[2]दोससयमूलजालं पुव्वरिसिविवज्जियं जई वंतं।
> अत्थं वहसि अणत्थं कीस निरत्थं तवं चरसि॥ २॥
> [3]वहबंधणमारणसेहणाओ काओ परिग्गहे णत्थि।
> तं जइ परिग्गहो च्चिय जइधम्मो तो णणु पवंचो॥३॥ १०९॥

सामान्येन परिग्रहस्य दोषानभिधाय प्रकृतेन श्रावकधर्मेणाभिसंबध्नाति—

**संसारमूलमारम्भास्तेषां हेतुः परिग्रहः।**
**तस्मादुपासकः कुर्यादल्पमल्पं परिग्रहम्॥११०॥**

आरम्भाः प्राण्युपमर्दादयस्ते संसारस्य मूलम्; एतदविवाद-

---

(१) छेदो भेदो व्यसनं आयासक्लेशभयविपाकाश्च।
मरणं धर्मभ्रंशः अरतिरर्थात् सर्वाणि॥ १॥

(२) दोषशतमूलजालं पूर्वर्षिविवर्जितं यदि वान्तम्।
अर्थं वहसि अनर्थं कस्मान्निरर्थं तपश्चरसि॥ २॥

(३) वधबन्धनमारणसेधनाः काः परिग्रहे न सन्ति।
तद् यदि परिग्रह एव यतिधर्मस्ततो ननु प्रपञ्चः॥ ३॥

सिद्धं, ततः किं तेषामारम्भाणां हेतुः कारणं, परिग्रहः, यत एवं तस्मादुपासकः साधूपासकः परिग्रहं धनधान्यादिकमल्पमल्पं नियतपरिमाणं कुर्यात् ॥ ११० ॥

पुनरपि सिंहावलोकितेन परिग्रहदोषानाह—

मुष्णन्ति विषयास्तेनादहति स्मरपावकः ।
रुन्धन्ति वनिताव्याधाः सङ्गैरङ्गीकृतं नरम्॥१११॥

सङ्गैर्धनधान्यहिरण्यादिपरिग्रहैरङ्गीकृतं वशीकृतं यथा बहु-परिग्रहं कान्तारगतं पुरुषं चौरा मुष्णन्ति तथा संसारकान्तारगतं विषयाः शब्दादयः संयमसर्वस्वापहारेण मुष्णन्ति निर्धनीकुर्वन्ति । यथा वा बहुपरिग्रहं नंष्टुमशक्नुवन्तं दीप्तो दवाग्निर्दहति तथा संसारकान्तारगतं मन्मथाग्निश्चिन्तादिना दशप्रकारेण विकारेण दहत्युपतापयति। यथा वा बहुपरिग्रहं कान्तारगतं व्याधा लुब्धका धनशरीरलोभेन रुन्धन्ति पलायितुमपि न ददति, तथा भव-कान्तारगतं वनिताः कामिन्यो धनार्थिन्यः शरीरभोगार्थिन्यश्च स्वातन्त्र्यवृत्तिनिषेधेन रुन्धन्ति । अपि च । बहुनापि परिग्रहेण काङ्क्षावतां न तृप्तिः सम्भवति अपि त्वसन्तोष एव वर्द्धते ।

यन्मुनयः—

'सुवण्णरुप्पस्स य पव्वया भवे
सिआ हु केलाससमा असङ्ख्या ।

(१) सुवर्णरूप्यस्य च पर्वता भवे स्युः खलु कैलाससमा असङ्ख्यकाः ।

[1]नरस्स लुद्धस्स न तेहि किंचि
इच्छा हु आगाससमा अणंतिआ ॥ १ ॥
[2]पुढवी साली जवा चेव
हिरण्णं पसुभिस्सह ।
पडिपुण्णं नालमेगस्स
इइ विज्जा तवं चरे ॥ २ ॥

कवयोऽप्याहुः—

तृष्णा खनिरगाधेयं दुष्पूरा केन पूर्यते ।
या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥ १ ॥

तथा—

[3]तण्हा अखंडिअ च्चिय विहवे अचुमए वि लहिजए ।
सेलंपि समारुहिजए किं व गयणस्स आरूढं ॥ १ ॥ १११ ॥

एतदेवाह—

**तृप्तो न पुत्रैः सगरः, कुचिकर्णो न गोधनैः ।**
**न धान्यैस्तिलकश्रेष्ठी, न नन्दः कनकोत्करैः ॥११२॥**

सगरो द्वितीयचक्रवर्त्ती, न षष्टिसहस्रसंख्यैः पुत्रैः सन्तुष्टस्तृप्तोऽभवत् । कुचिकर्णो नाम कश्चित् स बहुभिरपि गोधनैर्न तृप्तः ।

---

(१) नरस्य लुब्धस्य न तैः किञ्चित् इच्छा खलु आकाशसमा अनन्तिका ॥१॥

(२) पृथ्वी शालयो यवा एव हिरण्यं पशुभिः सह ।
प्रतिपूर्णं नालमेकस्य इति विदित्वा तपश्चरेत् ॥ २ ॥

(३) तृष्णा अखण्डिता एव विभवान् अत्युन्नतान् अपि लब्ध्वा ।
शैलमपि समारुह्य किंवा गगनस्य आरूढम् ॥ १ ॥

तिलको नाम श्रेष्ठी न धान्यैस्तृप्तः । न वा नन्दनृपतिः कनकराशिभिस्तृप्तः । ततोऽसन्तोषहेतुरेव परिग्रहः ।

सम्प्रदायगम्याश्च सगरादयः ।

स चायम्—

आसीत्पुर्यामयोध्यायां जितशत्रुर्महीपतिः ।
युवराजः सुमित्रोऽभूदुभाववनिमावतुः ॥ १ ॥
जितशत्रोरभूत्सूनुरजितस्वामितीर्थकृत् ।
सगरश्चक्रवर्त्ती च सुमित्रस्य महाभुजः ॥ २ ॥
जितशत्रुसुमित्रौ च व्रतं जगृहतुस्ततः ।
राजाऽभूदजितस्वामी सगरो युवराट् पुनः ॥ ३ ॥
प्रवव्राजाजितस्वामी गते काले कियत्यपि ।
राजाऽभूत्सगरश्चक्रवर्त्ती ऋषभसूनुवत् ॥ ४ ॥
अथ षष्टिसहस्राणि जज्ञिरे तस्य सूनवः ।
खेदच्छिदः संश्रितानां शाखा इव महातरोः ॥ ५ ॥
ज्येष्ठो जह्नुः कुमारोऽभूत्तेषां सगरजन्मनाम् ।
तेनैकदा तोषितोऽदाद्देवतेव पिता वरम् ॥ ६ ॥
त्वत्प्रसादेन दण्डादिरत्नैः सह सबान्धवः ।
महीं विचरितुं वाञ्छामीति जह्नुरयाचत ॥ ७ ॥
तद्दत्त्वा सगरेणापि विसृष्टः प्राचलत्ततः ।
अन्नुर्हृतसहस्रांशुः सहस्रैश्छत्रमण्डलैः ॥ ८ ॥
कुर्वन् महत्या भक्त्या चार्हच्चैत्यानि पदे पदे ।
सोऽर्चयन् विचरन्नुर्वीं ययावष्टापदं क्रमात् ॥ ९ ॥

तमष्टयोजनोच्छ्रायं चतुर्योजनविस्तृतम् ।
आरोहत्सहसोदर्यैर्जह्नुर्मितपरिच्छदः ॥ १० ॥
तत्रैकयोजनायाममर्धयोजनविस्तृतम् ।
त्रिगव्यूत्युन्नतं चैत्यं चतुर्द्वारं विवेश सः ॥ ११ ॥
बिम्बानि स्वस्वसंस्थानमानवर्णानि तत्र सः ।
अर्हतामृषभादीनां यथावत्पर्यपूजयत् ॥ १२ ॥
ववन्दे भरतभ्रातृशतस्तूपांश्च पावनान् ।
किंचिद्विचिन्त्य सहालुरन्वैरेवमुवाच च ॥ १३ ॥
अष्टापदसमं स्थानं मन्ये क्वापि न विद्यते ।
कारयामो वयं यत्र चैत्यमेतदिवापरम् ॥ १४ ॥
मुक्तोऽपि भरतं भुङ्क्ते भरतश्चक्रवर्त्यहो ।
शैले भरतसारेऽस्मिंश्चैत्यव्याजादवस्थितः ॥ १५ ॥
एतदेव कृतं चैत्यमस्माभिर्विधीयते ।
भविष्यत्पार्थिवैरस्य लुप्यमानस्य रक्षणम् ॥ १६ ॥
ततः सुरसहस्राधिष्ठितमादाय पाणिना ।
स दण्डं भ्रामयामास परितोऽष्टापदाचलम् ॥ १७ ॥
चेले योजनसहस्रं दीर्णा कूष्माण्डवत्क्षितौ ।
भ्राम्यता तेन भिन्नानि नागानां भुवनानि च ॥ १८ ॥
तैर्भीतैः शरणं भेजे स्वस्वामी ज्वलनप्रभः ।
स ज्ञात्वाऽवधिनोपेत्य जह्नुमित्यब्रवीत् क्रुधा ॥ १९ ॥
अनन्तजन्तुनिर्घातकारणं किमकारणम् ।
भवद्भिर्विदधे मत्तैर्दारुणं भूमिदारणम् ॥ २० ॥

